# भज गोविन्दं

भज गोविन्दं भज गोविन्दं

गोविन्दं भज मूढमते ।

सम्प्राप्ते सन्निहिते काले

नहि नहि रक्षति डुकृङ्करणे ॥ १॥

मूढ जहीहि धनागमतृष्णां

कुरु सद्बुद्धिं मनसि वितृष्णाम् ।

यल्लभसे निजकर्मोपात्तं

वित्तं तेन विनोदय चित्तम् ॥ २॥

नारीस्तनभरनाभीदेशं

दृष्ट्वा मा गा मोहावेशम् ।

एतन्मांसवसादिविकारं

मनसि विचिन्तय वारं वारम् ॥ ३॥

नलिनीदलगतजलमतितरलं

तद्वज्जीवितमतिशयचपलम् ।

विद्धि व्याध्यभिमानग्रस्तं

लोकं शोकहतं च समस्तम् ॥ ४॥

यावद्वित्तोपार्जनसक्त-

स्तावन्निजपरिवारो रक्तः ।

पश्चाज्जीवति जर्जरदेहे

वार्तां कोऽपि न पृच्छति गेहे ॥ ५॥

यावत्पवनो निवसति देहे

तावत्पृच्छति कुशलं गेहे ।

गतवति वायौ देहापाये

भार्या बिभ्यति तस्मिन्काये ॥ ६॥

बालस्तावत्क्रीडासक्तः

तरुणस्तावत्तरुणीसक्तः ।

वृद्धस्तावच्चिन्तासक्तः

परमे ब्रह्मणि कोऽपि न सक्तः ॥ ७॥

का ते कान्ता कस्ते पुत्रः

संसारोऽयमतीव विचित्रः ।

कस्य त्वं कः कुत आयात-

स्तत्त्वं चिन्तय तदिह भ्रातः ॥ ८॥

सत्सङ्गत्वे निस्सङ्गत्वं

निस्सङ्गत्वे निर्मोहत्वम् ।

निर्मोहत्वे निश्चलतत्त्वं

निश्चलतत्त्वे जीवन्मुक्तिः ॥ ९॥

वयसि गते कः कामविकारः

शुष्के नीरे कः कासारः ।

क्षीणे वित्ते कः परिवारः

ज्ञाते तत्त्वे कः संसारः ॥ १०॥

मा कुरु धनजनयौवनगर्वं

हरति निमेषात्कालः सर्वम् ।

मायामयमिदमखिलं हित्वा var बुध्वा

ब्रह्मपदं त्वं प्रविश विदित्वा ॥ ११॥

दिनयामिन्यौ सायं प्रातः

शिशिरवसन्तौ पुनरायातः ।

कालः क्रीडति गच्छत्यायु-

स्तदपि न मुञ्चत्याशावायुः ॥ १२॥

का ते कान्ता धनगतचिन्ता

वातुल किं तव नास्ति नियन्ता ।

त्रिजगति सज्जनसङ्गतिरेका

भवति भवार्णवतरणे नौका ॥ १३॥

द्वादशमञ्जरिकाभिरशेषः

कथितो वैयाकरणस्यैषः ।

उपदेशोऽभूद्विद्यानिपुणैः

श्रीमच्छङ्करभगवच्छरणैः ॥ १३अ ॥

जटिलो मुण्डी लुञ्छितकेशः

काषायाम्बरबहुकृतवेषः ।

पश्यन्नपि च न पश्यति मूढो

ह्युदरनिमित्तं बहुकृतवेषः ॥ १४॥

अङ्गं गलितं पलितं मुण्डं

दशनविहीनं जातं तुण्डम् ।

वृद्धो याति गृहीत्वा दण्डं

तदपि न मुञ्चत्याशापिण्डम् ॥ १५॥

अग्रे वह्निः पृष्ठे भानुः

रात्रौ चुबुकसमर्पितजानुः ।

करतलभिक्षस्तरुतलवास-

स्तदपि न मुञ्चत्याशापाशः ॥ १६॥

कुरुते गङ्गासागरगमनं

व्रतपरिपालनमथवा दानम् ।

ज्ञानविहीनः सर्वमतेन

मुक्तिं न भजति जन्मशतेन ॥ १७॥

सुरमंदिरतरुमूलनिवासः

शय्या भूतलमजिनं वासः ।

सर्वपरिग्रहभोगत्यागः

कस्य सुखं न करोति विरागः ॥ १८॥

योगरतो वा भोगरतो वा

सङ्गरतो वा सङ्गविहीनः ।

यस्य ब्रह्मणि रमते चित्तं

नन्दति नन्दति नन्दत्येव ॥ १९॥

भगवद्गीता किञ्चिदधीता

गङ्गाजललवकणिका पीता ।

सकृदपि येन मुरारिसमर्चा

क्रियते तस्य यमेन न चर्चा ॥ २०॥

पुनरपि जननं पुनरपि मरणं

पुनरपि जननीजठरे शयनम् ।

इह संसारे बहुदुस्तारे

कृपयाऽपारे पाहि मुरारे ॥ २१॥

रथ्याचर्पटविरचितकन्थः

पुण्यापुण्यविवर्जितपन्थः ।

योगी योगनियोजितचित्तो

रमते बालोन्मत्तवदेव ॥ २२॥

कस्त्वं कोऽहं कुत आयातः

का मे जननी को मे तातः ।

इति परिभावय सर्वमसारम्

विश्वं त्यक्त्वा स्वप्नविचारम् ॥ २३॥

त्वयि मयि चान्यत्रैको विष्णु-

र्व्यर्थं कुप्यसि मय्यसहिष्णुः ।

भव समचित्तः सर्वत्र त्वं

वाञ्छस्यचिराद्यदि विष्णुत्वम् ॥ २४॥

शत्रौ मित्रे पुत्रे बन्धौ

मा कुरु यत्नं विग्रहसन्धौ ।

सर्वस्मिन्नपि पश्यात्मानं

सर्वत्रोत्सृज भेदाज्ञानम् ॥ २५॥

कामं क्रोधं लोभं मोहं

त्यक्त्वाऽऽत्मानं भावय कोऽहम् । var  पश्यति सोऽहम्

आत्मज्ञानविहीना मूढा-

स्ते पच्यन्ते नरकनिगूढाः ॥ २६॥

गेयं गीतानामसहस्रं

ध्येयं श्रीपतिरूपमजस्रम् ।
नेयं सज्जनसङ्गे चित्तं
देयं दीनजनाय च वित्तम् ॥ २७॥

सुखतः क्रियते रामाभोगः
पश्चाद्धन्त शरीरे रोगः ।
यद्यपि लोके मरणं शरणं
तदपि न मुञ्चति पापाचरणम् ॥ २८॥

अर्थमनर्थं भावय नित्यं
नास्तिततः सुखलेशः सत्यम् ।
पुत्रादपि धनभाजां भीतिः
सर्वत्रैषा विहिता रीतिः ॥ २९॥

प्राणायामं प्रत्याहारं
नित्यानित्य विवेकविचारम् ।
जाप्यसमेतसमाधिविधानं
कुर्ववधानं महदवधानम् ॥ ३०॥

गुरुचरणाम्बुजनिर्भरभक्तः
संसारादचिराद्भव मुक्तः ।
सेन्द्रियमानसनियमादेवं
द्रक्ष्यसि निजहृदयस्थं देवम् ॥ ३१॥

मूढः कश्चन वैयाकरणो

डुःकृङ्करणाध्ययनधुरीणः ।

श्रीमच्छङ्करभगवच्छिष्यै-

र्बोधित आसीच्छोधितकरणः ॥ ३२॥

भज गोविन्दं भज गोविन्दं

गोविन्दं भज मूढमते ।

नामस्मरणादन्यमुपायं

नहि पश्यामो भवाब्धितरणे ॥ ३३॥